# अमृतबिन्दूपनिषत्

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।

ॐ शान्तिः शान्तिः शान्तिः ।
हरिः ॐ ॥

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय पिष्यासक्तं मुक्तये निर्विषयं स्मृतम् ॥ २॥

यतो निर्विष्यस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३॥

निरस्तनिषयासङ्गं संनिरुद्धं मनो हृदि ।
यदाऽऽयात्यात्मनो भावं तदा तत्परमं पदम् ॥ ४॥

तावदेव निरोद्धव्यं यावद्धृति गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषो न्यायश्च विस्तरः ॥ ५॥

नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते तदा ॥ ६॥

स्वरेण संधयेद्योगमस्वरं भावयेत्परम् ।
अस्वरेणानुभावेन नाभावो भाव इष्यते ॥ ७॥

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तदब्रह्मामिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥ ८॥

निर्विकल्पमनन्तं च हेतुद्याष्टान्तवर्जितम् ।
अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः ॥ ९॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १० ॥

एक एवाऽऽत्मा मन्थव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृष्यते जलचन्द्रवत् ॥ १२ ॥

घटसंवृतमाकाशं नीयमानो घटे यथा ।
घटो नीयेत नाऽकाशः तद्धाज्जीवो नभोपमः ॥ १३ ॥

घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भेदे न च जानाति स जानाति च नित्यशः ॥ १४ ॥

शब्दमायावृतो नैव तमसा याति पुष्करे ।
भिन्नो तमसि चैकत्वमेक एवानुपश्यति ॥ १५ ॥

शब्दाक्षरं परं ब्रह्म तस्मिन्क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्यायेच्चद्यदीच्छेच्छान्तिमात्मनः ॥ १६ ॥

द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् ।
शब्दब्रह्माणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥

ग्रन्थमभ्यस्य मेधावी ज्ञानवीज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८ ॥

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत्पष्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥

धृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मनसि मन्थयितव्यं मनु मन्थानभूतेन ॥ २० ॥

ज्ञाननेत्रं समाधाय चोद्धरेद्वह्गिवत्परम् ।
निष्कलं निश्चलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१ ॥

सर्वभूताधिवासं यद्भूतेषु च वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः ॥ २२ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो॓ऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।

ॐ शान्तिः शान्तिः शान्तिः ।
हरिः ॐ ॥

॥ इत्यथर्ववेदेऽमृत्बिन्दूपनिषत्समाप्ता ॥

Amṛtabindu Upaniṣad
transliterated by Anshuman Pandey [*apandey@u.washington.edu*]
16 April 1996